अपि करिपरिभूतिवीतशक्तिश्चिरजरयाऽपि च जर्जरीकृताङ्गः ।
अपि भवदधिकक्षुधाऽभिभूतः किमु वृणुते मृगनायकस्तृणानि ॥

अत्र मृगनायक इति विशेष्यपदं साभिप्रायम् । तथा हि अपरे मृगास्तृणान्यश्नन्तीति युक्तमेव । अयं तु मृगाणां नायकः कथं तृणान्यश्नीयात्, विना दारितमत्तमातङ्गपिशितानीति भावप्रकाशकमिदं विशेष्यपदमिति भवति परिकराङ्कुरालङ्कारः ॥

स्यात्काव्यलिङ्गं वाक्यार्थे नूतनार्थसमर्थके ।

वाक्यार्थे नूतनार्थसमर्थके कदाप्यजातार्थप्रकाशके सति काव्यलिङ्गमलङ्कारः स्यात् । यथा माधवचम्पूग्रन्थे—

भस्मीभूतः कुसुमविशिखः शम्भुनेत्राग्निनाऽभू-
ज्ज्वालादाथी तदनु मनसि प्राप्तजन्मा बभूव ।
भूयस्तस्मिन् विरहदहनैर्दाहितोऽसौ मयैवं
कुत्रोत्पन्नो व्यथयति पुनर्मामहो तन्न वेद्मि ॥

तत्र विरहदहनेन मदनस्य दाह एव नूतनः कदाऽप्यभूतत्वात्तादृशार्थप्रकाशकोऽत्र वाक्यार्थ इति भवति काव्यलिङ्गालङ्कारः ॥

वाञ्छितार्थाधिकप्राप्तिरयत्नेन प्रहर्षणम् ॥ २५ ॥

यत्र विनैव यत्नं वाञ्छितादर्थादधिकप्राप्तिर्वर्ण्यते तत्र प्रहर्षणालङ्कारः । यथा शृङ्गारतटिन्याम्—

अद्याऽस्ति सा रोषवती सखी मे
निवेदिते द्वारि सखीभिरित्थम् ।
यावद्युवा वाञ्छति दृष्टिमात्र-
मालिङ्गितस्तावदयं युवत्या ॥

अत्र दृष्टिमात्रवाञ्छकस्य नायकस्याऽप्रयत्नेनैवाऽऽलिङ्गन-प्राप्तिवर्णनेन भवति प्रहर्षणालङ्कारः ॥

**इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम् ।**

इष्यमाणवस्तुनो विरुद्धवस्तुप्राप्तिर्यत्र वर्ण्यते तत्र विषादना-लङ्कारः । यथा कल्पलतायाम्—

गत्वा पिबाम्यति मधूनि समं वधूभि-
रित्थं विचिन्त्य सरसीमलिरेति यावत् ।
केनापि तावदतिमत्तमतङ्गजेन
निर्मूलितानि सहसैव सरोरुहाणि ॥

अत्रेष्यमाणस्य सरसीषु मधुपानस्य विरुद्धं वस्तु मधुस्थान-भूतानां सरोरुहाणामुन्मूलनं तस्य प्राप्तिर्वर्णितेति भवति विषादनालङ्कारः ॥

**सामान्यं यदि सादृश्याद्भेद एव न लक्ष्यते ॥ २६ ॥**

सादृश्यात्समानधर्मवशाद्यदि परस्परं वस्तूनां भेद एव न ज्ञायते तर्हि समान्यालङ्कारः । यथा कल्पलतायाम्—

उद्यत्पलाशकुसुमैरमितैः समन्ता-
च्छोणीकृतासु सकलासु दिशासु सद्यः ।
नाऽबोधि कामुकजनैरभिसारिणीभिः
शोणायितापि पुरुहूतदिशा निशान्ते ॥

अत्र सादृश्यात् किंशुककृतसकलदिक्छोणत्वरूपधर्माद् निशान्तकालीनाऽरुणोदयकृतारक्तप्राचीदिशाया इतरदिगपेक्षया भेदो न लक्ष्यते इति भवति सामान्यालङ्कारः । मीलिते तु सदृशधर्मेणाऽभिभूतस्य पदार्थस्य ज्ञानमेव न जायते, इह तु सदृश-धर्मवशात् परस्परं भेदमात्रं न ज्ञायते पदार्थस्तु ज्ञायत एवेति मीलितात्सामान्ये विशेषः ॥

अतिशयोक्तिश्चतुर्विधा— अक्रमातिशयोक्त्यन्तातिशयोक्तिभेदकातिशयोक्तिरूपकातिशयोक्तय इति । तासां क्रमेण लक्षणोदाहरणानि—

**अक्रमातिशयोक्तिश्चेद्युगपत्कार्यकारणे ।**

युगपदेकदैव यदि कार्यकारणयोरुत्पत्तिर्वर्ण्यते तर्हि अक्रमातिशयोक्त्यलङ्कारः । यथा—

त्वदरातिमहीपालभवने भुवनेश्वर ! ।
तव क्रोधेन दारिद्र्यं सहैव समुपस्थितम् ॥

अत्र दारिद्र्यरूपकार्यस्य कारणं नृपक्रोधः। युक्तं तु कारणस्य पूर्वभावः परभावः कार्यस्य । इह तु तयोरेककालमेवोत्पत्तिवर्णनाद्भवत्यक्रमातिशयोक्तिरलङ्कारः ॥

**अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे ॥ २७ ॥**

कार्यकारणयोः पौर्वापर्यव्यतिक्रमे सति कार्योत्पत्त्यनन्तरं कारणोत्पत्तौ वर्णितायां सत्यामत्यन्तातिशयोक्त्यलङ्कारः । यथा शृङ्गारतटिन्याम्—

मम तु मानमयी मतिरादितो गतवती बत तत्तनुवीक्षणात् ।
अनुनयं कृतवानथ पादयोः सखि ! पतन् पतिरेष पुनःपुनः ॥

अत्र कार्यस्य मानभङ्गस्य प्रसिद्धकारणादनुनयात् पूर्वमेवोत्पत्तिर्वर्णितेति भवत्यत्यन्तातिशयोक्त्यलङ्कारः ॥

**भेदकातिशयोक्तिः स्यात् स्वभेदश्चेत्स्वजातिषु ।**

यदि स्वजातिष्वेव स्वभेदो वर्ण्यते तदा भेदकातिशयोक्त्यलङ्कारः । यथा तत्रैव—

धन्येयमन्यैव विलासिनीनां लीलाविलासप्रभवाय रीतिः ।
असारसंसारविचारिणोऽपि यथा किल व्याकुलतां भजन्ति ॥

अत्र सकलरीतीनां मध्ये नितम्बिनीनां रीतिरन्यैवेत्युक्त्वा स्वजातिमध्य एव स्वभेदः कृत इति भवति भेदकातिशयोक्त्यलङ्कारः ॥

**रूपकातिशयोक्तिः स्याद्रूपकाद्रूप्यनिर्णये ॥ २८ ॥**

सादृश्यवशात् यस्याभेदोऽन्यत्राऽऽरोप्यते तद्रूपकम् । यस्मिन्नन्यस्याऽभेद आरोप्यते तद्रूप्यम् । तथा च यत्र रूप्यस्योल्लेखो नास्ति केवलं रूपककथनादेव रूप्यमुन्नीयते तत्र रूपकातिशयोक्त्यलङ्कारः । यथा माधवचम्पूग्रन्थे—

भुजङ्गदयिताश्रिता लसदनेकपुष्पान्विता
द्विरेफततिसेविता प्रमदखञ्जनालङ्कृता ।
फलद्वयभरानता विलसिता नवैः पल्लवै-
र्विलोचनपथं गता भवति कापि हैमी लता ॥

अत्र हेमलतास्वरूपस्य रूपकस्यैवोल्लेखेन कामिनीस्वरूपं रूप्यमुन्नीयते, न तु कामिन्याः पृथगुल्लेखोऽप्यस्ति । एवं भुजगदयितोल्लेखेन वेणी, पुष्पोल्लेखेन दन्तपङ्क्तिः, द्विरेफतत्युल्लेखेन लोमावली, खञ्जनोल्लेखेन नयने, फलद्वयोल्लेखेन कुचौ, पल्लवोल्लेखेन करचरणाऽधरा इति भवति रूपकातिशयोक्त्यलङ्कारः ॥

**प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वावकल्पनम् ।**

तत्कर्मण्यशक्तस्यापि असमर्थस्यापि तत्कर्मणि शक्तत्वावकल्पनं समर्थत्वकल्पनं यत्र क्रियते तत्र प्रौढोक्त्यलङ्कारः । यथा—

दिशो दण्डानूर्ध्वं युगपदधिरुह्य प्रचलिता
समेत्य ब्रह्माण्डं प्रसरितवती सिंहनृपतेः ।
दलत्तारापुष्पस्फुरदमृतधामैकफलिनी
जगत्पूर्त्यै कीर्तिः कलयति लतामूर्तिमभितः ॥

अत्र मूर्तिग्रहणासमर्थाया अपि कीर्तेर्लतामूर्तिग्रहणवर्णनेन भवति प्रौढोक्त्यलङ्कारः ॥

**वर्ण्यानां तुल्यधर्मत्वे कथिता तुल्ययोगिता ॥२९॥**

वर्ण्यानां वस्तूनां तुल्यधर्मत्वे सति समानधर्मत्वे सति तुल्ययोगितालङ्कारः । यथा—

अस्तं याते दिवानाथे निशानाथे महोदयम् ।
उन्मीलन्ति कुमुद्वन्ति चकोरीनयनानि च ॥

अत्र वर्ण्यानां कुमुद्वतीनां चकोरीनयनानां चोन्मीलनरूपसमानधर्मत्ववर्णनाद्भवति तुल्ययोगितालङ्कारः ॥

**सम्भावनं यदीत्थं स्यादित्यूहे सति जायते ।**

यदि इत्थं स्यात्तर्हि इदं स्यादित्यूहे सति वितर्के सति सम्भावनालङ्कारो जायते । यथा—

अर्द्धाङ्गीकृतपूर्वकीर्तिवनितादीव्यत्सितांशुप्रभं
कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् ।
विश्वव्याप्यविनाशि शङ्करपदं यायात्त्वदीयं यशो
न स्याच्चेद्यशवन्तसिंहनृपते ! त्वद्दानपानीयजम् ॥

अत्र यदि त्वद्दानपानीयजं यशो न स्यात्तर्हि शङ्करपदं यायादिति तर्कः कृत इति भवति संभावनालङ्कारः ॥

**अवर्ण्यानां च वर्ण्यानां धर्मैक्ये सति दीपकम् ॥३०॥**

अवर्ण्यानां प्रकृतवर्णने मुख्यत्वेनाऽनुद्देश्यानां प्रकृतवर्णने मुख्यत्वेनोद्देश्यानां पदार्थानां धर्मैक्ये सति दीपकालङ्कारः । यथा कल्पलतायाम्—

इन्दुः कान्त्या यतिः शान्त्या नीत्या च वसुधाधिपः ।
रीत्या काव्यं वधूर्धृत्या कुरुते जनरञ्जनम् ॥

अत्र चन्द्रादीनामवर्ण्यानां वर्ण्यस्य च राज्ञो जनरञ्जनरूपधर्मैक्येन भवति दीपकालङ्कारः ॥

आवृत्ते दीपकपदे भवेदावृत्तिदीपकम् ।

दीपकपदे वर्ण्याऽवर्ण्ययोर्धर्मैक्यबोधकपदे आवृत्ते सत्यावृत्तिदीपकालङ्कारो भवति । आवृत्तिः पुनःपुनःकथनम् । यथा—

सुधांशुर्भाति यामिन्या कामिन्या भाति कामुकः ।
लतया भूरूहो भाति भूसुरो भाति विद्यया ॥

अत्र वर्ण्यस्य भूसुरस्य ब्राह्मणस्याऽवर्ण्यस्य च चन्द्रादेर्धर्मैक्यबोधकस्य भातीतिपदस्याऽऽवृत्तिरस्तीति भवत्यावृत्तिदीपकालङ्कारः ॥

पृथगुद्दिष्टसामान्ये प्रतिवस्तूपमा मता ॥३१॥

सामान्ये समानधर्मे पृथगुद्दिष्टे सति भिन्नपदेन कथिते सति प्रतिवस्तुनि प्रतिपदार्थे उपमासत्त्वे च प्रतिवस्तूपमालङ्कारो भवति । यथा—

विलीनतामेव गता दरिद्रता
महीश ! दानाय भवत्करोदये ।
अदृश्यतामेव भजन्ति कौशिकाः
समन्ततो भानुमतः करोदये ॥

अत्र दरिद्रताया उलूकानां चाऽदृश्यत्वप्राप्तिरूपसमानधर्मो दरिद्रता विलीनतां गता, कौशिका अदृश्यतां भजन्तीति पृथक्पदेनोक्तः। अस्ति च प्रतिपदार्थमेवोपमा। तथा हि राज्ञो भानुमता, दरिद्रतायाः कौशिकैः, करस्य किरणैरिति भवति प्रतिवस्तूपमालङ्कारः ॥

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तालङ्कृतिस्तदा ।

यदि बिम्बप्रतिबिम्बत्वं भवति तदा दृष्टान्तालङ्कारः । अयं भावः—यथा बिम्बप्रतिबिम्बयोर्वास्तवमुखदर्पणगतमुखयोः परस्परमेकैव छाया दृश्यते, तथा यत्र पदार्थयोः परस्परमेकैव छाया भासते तत्राऽयमलङ्कारः । यथा—

अनर्गलपरिस्फुरन्मधुरदिव्यकाव्यंवदं
हठोद्धतपदद्वयस्फुरितधीरपि स्पर्धते ।
दिनैः कतिपयैरितः कथयितैव दिल्लीपतेः
पदं तृणमिति स्फुटं मनसि भिल्लपल्लीपतिः ॥

अत्र तादृशकाव्यंवदमपि हठोद्धतपदद्वयस्फुरितधीः कुकविरपि स्पर्द्धते इत्येकः पदार्थः । इतः कतिपयैर्दिनैर्दिल्लीपतेरपि पदं तृणमिति मनसि भिल्लपल्लीपतिः कथयितैवेत्यपरः पदार्थः । अनयोस्तु बिम्बप्रतिबिम्बभावः स्फुट एव । तथा हि यथा तादृशकाव्यंवदकविस्पर्द्धापदद्वयकथककुकवेरुपहासायैव तथा दिल्लीपतेः पदं तृणमिति भिल्लपल्लीपतेरपि कथनमुपहासायैवेति । एवं यथैतत्कथनं तथा कुकविस्पर्द्धा इति परस्परबिम्बप्रतिबिम्बवदेकैव च्छाया भासते इति भवत्यत्र दृष्टान्तालङ्कारः । नन्वत्र प्रतिवस्तूपमालङ्कारः किं न स्यादिति चेन्न, पल्लीपतेः कथनरूपो धर्मः कुकवेः स्पर्द्धाकरणरूपो धर्म इति धर्मभेदात् । प्रतिवस्तूपमा तु धर्मैक्ये इति ॥

वाक्यार्थयोः सदृशयोरैक्यारोपे निदर्शना ॥३१॥

सदृशयोर्वाक्यार्थयोर्यत्तद्भ्यामैक्यारोपे कृते सति निदर्शनालङ्कारः । यथा शृङ्गारतटिन्याम्—

योऽभितो वसतो नाथ ! भवतः समुपागमः ।
मदीयभवने सोऽयमिन्दोरमृतनिर्झरः ॥

अत्र सुखदत्वेनाऽसम्भावितत्वेन च सदृशयोर्नायकागमेन्दु-सम्बन्ध्यमृतनिर्झरयोर्यत्तत्पदैनैक्यारोपः कृत इति भवति निदर्शनालङ्कारः। असम्भावितत्वं तु स्फुटमेव। तथा हि—अभितो वसतः कान्तान्तरासङ्गिनो नायकस्य समयाभावादेवागमाभावः। एवं देवतामात्रभोग्यत्वेनाऽमृतस्य निर्झराभावोऽपीति॥

व्यतिरेको विशेषश्चेदुपमानोपमेययोः।

उपमानोपमेययोः कश्चिद्विशेषश्चेत्कीर्त्यते तर्हि व्यतिरेकालङ्कारो भवति। यथा—

सुधेव वसुधा सत्यमानन्दयति मानसम्।
महान्तमपि किं त्वेषा संमोहयति सन्ततम्॥

अत्रोपमानभूतसुधात उपमेयभूतवसुधायाः संमोहकत्वेनैव विशेष इति भवति व्यतिरेकालङ्कारः॥

सहोक्तिः सहभावश्चेद्भासते जनरञ्जकः॥३१॥

यदि जनरञ्जकः सहभावः सहवर्तिता भासते तर्हि सहोक्त्यलङ्कारः। यथा—

अतिचित्रमिदं भुवने प्रतिपादितमेवमहो जगतीपतिना
विचरन्नपि यन्नियतं सहितो भवदीयप्रतापदिवापतिना।
यशवन्त! नवक्षितिनायक! तावकदानपयोनिधितः सहसा
जनिमेत्य यशोहिमदीधितिरेष जगद्धवलीकुरुते महसा॥

अत्र प्रतापदिवापतेर्यशोहिमदीधितेश्च सहभावो जनरञ्जको भवत्येवेति सहोक्त्यलङ्कारः। ननु भवदीयप्रतापदिवापतिनेत्यत्र संयुक्तस्य प्रेत्यक्षरस्य पूर्वो यकारो गुरुरेवेति छन्दोभङ्ग इति चेन्न, रेफसंयुक्ताक्षराऽऽद्यक्षरं विकल्पेन गुरु भवतीत्यतः पाठकाले लघुतयोच्चारणीयो यकार इत्यदोषात्। अत्र च

जनरञ्जक इति विशेषणात् 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादौ न सहोक्त्यलङ्कारः ॥

**विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्यते ।**

यत्र किञ्चिद्वस्तु विना प्रस्तुतं वस्तु हीनमपकृष्टमुच्यते तत्र विनोक्त्यलङ्कारः । यथा—

अमन्दपुण्यसन्दोहसम्पादितमनिन्दितम् ।
वृथा जन्मभृतां जन्म विना सुकृतसञ्चयम् ॥

अत्र सुकृतसञ्चयरूपकिञ्चिद्वस्तु विना प्रस्तुतं जन्मभृतां तादृगपि जन्माऽपकृष्टमुक्तमिति भवति विनोक्त्यलङ्कारः ॥

**समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ॥३४॥**

यदि कस्मिंश्चिदर्थे प्रस्तुते वर्णिते सति अप्रस्तुतस्याऽन्यपदार्थस्य परिस्फूर्तिर्भवति तदा समासोक्त्यलङ्कारः । यथा कल्पलतायाम् —

मयि मुकुलितमालतीलतायां स्थितवति यानि दिनानि सङ्गतानि ।
अहह ! विधिविधानतोऽधुनैवं कथमपि तानि पुनर्न वीक्षितानि ॥

अत्र सखीनां मध्ये परस्परं मालतीगुणवर्णनकाले केनचिद्विरहिणा कृते प्रस्तुतमालतीलतावस्थानवर्णनेऽप्रस्तुतस्याऽभिनवकामिनीसङ्गमस्य मुकुलितेत्यादिपदमहिम्नेव परिस्फूर्तिर्भवत्येवेति भवति समासोक्त्यलङ्कारः ॥

**श्लेषः पदे चेन्नानार्थप्रतीतिः सप्रयोजना ।**

यत्र पदे किञ्चित्प्रयोजनवशान्नानार्थप्रतीतिर्भवति तत्र श्लेषालङ्कारः । यथा कल्पलतायाम्—

त्रातारो भूभृतां ते प्रबलतरसुरत्राणसन्त्रासभाजां
यस्य प्रौढप्रतापज्वलनकवलिता नायका वाहिनीनाम् ।

धाराभिर्दानावारामुदितनिजमनःसत्प्रसादोचिताभिः
पूर्णत्वं प्राप्य तूर्णं सकलबलभृतां दुस्तरत्वं भजन्ति ॥

अत्र भूभृच्छब्देन राजनः पर्वताश्च, सुरत्राणशब्देन यवनक्षितीश इन्द्रश्च, कवलितशब्देन ग्रस्ताः शोषिताश्च, नायकशब्देनाऽधिपतयो भर्तारश्च, वाहिनीशब्देन सेना नद्यश्च, दुस्तरत्वशब्देनाऽयोध्यत्वमलङ्घ्यत्वं च कथितमिति सप्रयोजनैव एकैकपदस्य नानार्थतेति भवतीह श्लेषालङ्कारः ॥

अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा ॥ ३५ ॥

यत्र साऽप्रस्तुतस्याऽप्रकृतवर्ण्यस्य प्रशंसा स्तुतिः प्रस्तुतानुगा भवति प्रस्तुते प्रकृतवक्तव्य एव पर्यवस्यति, तेनाऽप्रस्तुतप्रशंसालङ्कारः । यथा—

स्वर्णाब्जस्फुटमानमानससरःसम्भूतिराविर्भव—
द्गीर्वाणादरसारपूरिततया संशोभितस्वर्धुनिः ।
दुर्मानैरवमानितो यदि पुनर्ग्रामीणदीनान्वयैः
किं हीनः परिशंस्यते स जगतां हंसः प्रशंसास्पदम् ॥

अत्रऽप्रस्तुतेदृशहंसस्येयं प्रशंसा स्तुतिः कस्मिंश्चिदनभिज्ञैरवमानिते महापुरुषे पर्यवस्यतीति भवत्यप्रस्तुतप्रशंसालङ्कारः ॥

स्यात्सामान्यविशेषोक्तावलङ्कारः स एव हि ।

सामान्ये वक्तव्ये विशेषोक्तौ सत्यां स एव सामान्यविशेष एवाऽलङ्कारः । यथा—

धिगहो ! कामिपुरुषानलं परुषकर्मिणः ।
जीवितान्यपि मुञ्चान्ति यदमी कामिनीकृते ॥

अत्र कामिनः कामिनीकृते सर्वमेव त्यजन्तीति सामान्ये वक्तव्ये जीवितत्यागरूपविशेषोक्तिः कृतेति भवति सामन्यविशेषालङ्कारः ॥

भवेदर्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा ॥ ३६ ॥

यत्र मुख्येनाऽर्थेनाऽनुषक्तं सहितं मुख्यार्थस्यैव परिपोषकतयाऽर्थान्तरं पदार्थान्तरमुच्यते तत्राऽर्थान्तरन्यासालङ्कारः । यथा—

स रावणो दैवतयूथरावणो विदेहभूमीपतिनन्दिनीकृते ।
जगाम रामस्य शरैर्यमालयं न कामिनां किञ्चिदपीह दुष्करम् ॥

अत्र कामिनां न किञ्चिदपि दुष्करमिति मुख्येनाऽर्थेन सहितं रावणस्य यमालयगमनरूपं मुख्यार्थस्यैव परिपोषकमर्थान्तरमुक्तमिति भवत्यर्थान्तरन्यासालङ्कारः ॥

फलेन प्रकटीभूते पर्यायोक्तिस्तु कारणे ।

कारणे फलेनैव प्रकटीभूते सति पर्यायोक्त्यलङ्कारः । यथा कल्पलतायाम्—

निजाश्रुभिः पूरितभूप्रदेशाः पिपासया पीतपयःप्रवाहाः ।
वनीघनीभूतदरीगिरीणामरिप्रियाः प्राणभिया श्रयन्ति ॥

अत्राऽरिप्रियाणां गिरीदरीश्रयणरूपफलेनैव शत्रूच्छेदरूपं कारणं प्रकटीभवतीति भवति पर्यायोक्त्यलङ्कारः ॥

स्तुतिव्याजेन निन्दायां स्तुतिनिन्दाऽभिधीयते ॥ ३७ ॥

स्तुतिव्याजेन निन्दायां कृतायां सत्यां स्तुतिनिन्दालङ्कारः । यथा—

धन्या धन्या क्षात्रवृत्तिस्तवेयं धन्या धन्या चेदृशी धर्मबुद्धिः ।
मातुः कण्ठच्छेदिनी यातु राम ! प्रादुर्भूता गर्भिणीगर्भपाते ॥

अत्र परशुरामस्य क्षात्रवृत्तौ धर्मबुद्धौ च धन्यत्वोत्कीर्तनेन कृताऽपि स्तुतिर्निन्दैवाऽत्यन्ताधर्महेतुमातृकण्ठच्छेदगर्भिणीगर्भपातकर्तृत्वादितीह भवति स्तुतिनिन्दालङ्कारः ॥

**निन्दास्तुतिरलङ्कारो निन्दाव्याजेन चेत्स्तुतिः ।**

निन्दाव्याजेन यत्र स्तुतिः क्रियते तत्र निन्दास्तुतिरलङ्कारः । यथा--

वाराणसि ! वृथैव त्वामाश्रयन्ति महाजनाः ।
भवभोगपरित्यक्तं यत्करोषि दिगम्बरम् ॥

अत्र भवभोगपरित्यागपूर्वकदिगम्बरत्वकारिणीं वाराणसीं महाजना वृथा भजन्तीत्यनेन कृतापि निन्दा स्तुतिरूपैव। तथा हि—इयं खलु सांसारिकभोगविरतं दिगम्बरं सदाशिवरूपं करोतीति भवतीह निन्दास्तुतिरलङ्कारः ॥

**आक्षेपस्तु प्रयुक्तस्य प्रतिषेधो विचारणात् ॥३८॥**

प्रथमतः प्रयुक्तस्य वस्तुनः पुनर्विचारणाद्यत्र निषेधः क्रियते तत्राऽऽक्षेपालङ्कारः । यथा--

आलोकितुं याहि सरः सरसं खञ्जनद्वयम् ।
अथवाऽऽलोकयाऽत्रैव कान्ताया नयनद्वयम् ॥

अत्र खञ्जनमालोकितुं सरो याहीति प्रथमतः प्रयुक्तम् । अथ विचारेण कान्ताया नयनद्वयमालोकयेत्यनुज्ञया तस्य निषेधः कृत इति भवत्याक्षेपालङ्कारः ॥

**विरोधोऽनुपपत्तिश्चेद् गुणद्रव्यक्रियादिषु ।**

गुणद्रव्यक्रियादिषु यद्यनुपपत्तिर्वर्ण्यते तदा विरोधालङ्कारः । यथा--

स कीदृशः शीतकरो यो मां दहति सन्ततम् ।
स च कालः कथं क्रूरो यो मे शरणतां गतः ॥

अत्र दाहकरस्य शीतकरत्वमनुपपन्नम् । एवं शरणतां गतस्य यमस्य क्रूरत्वमप्यनुपपन्नमिति वर्णनाद्भवति विरोधालङ्कारः ॥

श्लेषादिभिर्विरोधश्चेद्विरोधाभास उच्यते ॥ ३६ ॥

यदि वस्तुतो विरोधो नास्ति श्लेषमात्रेणैव विरोधो भासते तदा विरोधाभासालङ्कारः । यथा—

शिवोऽपि न शिवाप्रभुः स मदनोऽपि नो मन्मथः
कलानिधितया स्फुरन्नपि सदा न दोषाकरः ।
भवन्नपि पतिः श्रियो न च जनार्दनत्वं गत-
स्तदद्भुतगुणोत्तरो हृदयभूपतिर्भासते ॥

अत्र श्लेषेण विरोधो भासते । तथा हि—यः शिवो महादेवः स तु शिवायाः पार्वत्याः प्रभुर्भवत्येव, अयं पुनर्भूपतिः शिवोऽपि सन् शिवाप्रभुर्नेति विरोधः । वस्तुतो विरोधो नास्ति । तथा च शिवोऽपि कल्याणस्वरूपोऽप्ययं शिवाय कल्याणायाऽप्रभुर्वाऽसमर्थो न । तथा चाऽयं भावः—अन्ये बहवः स्वयमेव कल्याणरूपाः परकल्याणकरणेऽसमर्थाः, अयं तु स्वयमपि कल्याणरूपः परकल्याणकरणे च समर्थ इति । एवमग्रेऽपि बोध्यमिति भवति विरोधाभासालङ्कारः ॥

असम्भवोऽर्थनिष्पत्तावसम्भाव्यत्ववर्णनम् ।

अर्थस्य पदार्थस्य निष्पत्तौ सिद्धौ सत्यां यत्राऽसम्भाव्यत्ववर्णनम्—इदमसम्भवं वस्तु जातमिति वर्णनं क्रियते तत्राऽसम्भवालङ्कारः । यथा माधवचम्पूग्रन्थे—

बाणेन येन निहतो भाले महिषसत्तमः ।
पश्य दैवस्य माहात्म्यं तेनैवाऽस्य हयो हतः ॥

अत्र हयहननरूपकार्यनिष्पत्तौ सत्यामसंभाव्यत्वं वर्ण्यते । तथा हि—अहो येन बाणेन संमुखमागतस्य महिषस्य हननं कृतं तेनैव स्ववाहस्याऽपि हननमित्यस्याऽत्यन्तासंभावितत्वं 'पश्य

दैवस्य माहात्म्य'मित्यनेनोक्तमिति भवत्यसम्भवालङ्कारः । श्लोक-तात्पर्यं तु भाले बाणे लग्ने सति संमुखमागच्छन्महिषः सत्वरं विमुखीभूतः । अथ तत्पुच्छभागेन निःसृतो महायवीयान् बाणो हयशिरसि लग्न इति ॥

विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे ॥४०॥

कारणेऽपि याते सति कार्यस्योत्पत्तिर्यत्र वर्ण्यते तत्र विशेषोक्त्यलङ्कारः । यथा—

दुर्जनैरपि कृते दुरुत्तरे नैव कोपमुपयन्ति सज्जनाः ।
कोपमप्युपगताः कदापि चेन्नाऽपकृद्विधिविधानकारिणः ॥

अत्र दुरुत्तररूपकारणे जातेऽपि-कोपरूपकार्याभावः । एवं कोपरूपकारणे जातेऽप्यपकाराभावस्तु नियत एवेति भवति विशेषोक्त्यलङ्कारः ॥

विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत् ।

यदि कारणं विनाऽपि कार्यजन्म भवति तदा विभावना-लङ्कारः । यथा माधवचम्पूग्रन्थे—

प्रचलति सति यस्मिन् कौतुकेनाऽपि भूमौ
भवति सुरसमाजो व्याकुलः सुन्दरीभिः ।
दशशतशतरक्षो नायकानामधीशो
भवति न हि गरीयान् स स्वतः किं बलीयान् ॥

अत्र स्वर्लोकगमनोद्यमरूपकारणं विना सुरसमाजवैकल्य-रूपकार्योदयाद्भवति विभावनालङ्कारः ॥

अख्यातभिन्नदेशित्वे कार्यहेत्वोरसङ्गतिः ॥ ४१ ॥

कार्यकारणयोरख्यातमप्रसिद्धं यद्भिन्नदेशित्वं भिन्नस्थान-स्थितत्वं तस्मिन् सत्यसङ्गतिरलङ्कारः । यथा—

उपकारिमुखेन्दुस्थमन्यदेव वचोऽमृतम् ।
क्वचित्स्रवति कस्याऽपि जायते जीवितोदयः ॥

अत्राऽमृतस्रवणरूपकारणजीवितोदयरूपकार्ययोः प्रसिद्धं त्वेकदेशित्वमेव, यत्रैवाऽमृतं स्रवति तस्यैव जीवितोदयदर्शनात् । इदं तु उपकारिमुखेन्दुस्थममृतं क्वचित् स्रवति कस्यचिज्जीवितोदयो भवतीत्यप्रसिद्धमेव भिन्नदेशित्वमुक्तमिति भवत्यसङ्गतिरलङ्कारः । अख्यातपदोपदानात्तु—

उदयाचलचूडाग्रमालम्बति दिवाकरे ।
सहसैव प्रकाशन्ते दर्योऽपि च गिरेरिमाः ॥

इत्यत्रोदयाचलचूडाग्रीयदिवाकरसम्बन्धकारणगिरिप्रकाशरूपकार्ययोः प्रसिद्धमेव भिन्नदेशित्वमिति न भवत्यसङ्गतिरलङ्कारः ॥

विषमं यद्यनौचित्यमन्योन्यान्वयकल्पने ।

अन्योन्यस्य परस्परस्याऽन्वयकल्पने सम्बन्धकल्पने यद्यनौचित्यमनुचितत्वं वर्ण्यते तर्हि विषमालङ्कारः । यथा—

क्वैतत्ते नवतारुण्यं क्व कान्तविरहोऽप्ययम् ।
सैवाऽविवेकिता धातुरिह हेतुरहेतुकी ॥

अत्र तारुण्यकान्तविरहयोः सम्बन्धकल्पने क्वपदयोः प्रयोगेणैवाऽनुचितत्वं दर्शितमिति भवति विषमालङ्कारः ॥

अन्योन्यं वस्तुसम्बन्धे सममौचित्यवर्णने ॥४२॥

परस्परं वस्तूनां सम्बन्धे उचितत्ववर्णने कृते सति समालङ्कारः । यथा—

उचितं यत्कृतं दन्ते तृणं भवदरातिभिः ।
ईदृशेषु विधानेषु तृणमेवाऽमृतायते ॥

अत्र तृणादन्तयोः सम्बन्धे उचितत्ववर्णनाद्भवति समालङ्कारः ॥

**विचित्रं चेत्प्रयत्नः स्याद्विपरीतफलप्रदः ।**

यदि प्रयत्नः कश्चित् किञ्चिद्विपरीतफलजनकः स्यात्तर्हि विचित्रालङ्कारः । यथा—

रतिरन्यैव धन्येयं विधिना विधिनोदिता ।
कायक्लेशेन सौख्यानि लभन्ते यत्तपस्विनः ॥

अत्र दुःखरूपफलजनकः कायक्लेशरूपो यत्नः, स तु विपरीतं सुखरूपफलं जनयतीति भवति विचित्रालङ्कारः ॥

**आधिकं त्वधिकाधारादाधेयाधिक्यवर्णने ॥ ४१ ॥**

अन्येभ्योऽधिकादप्याधारादाधेये आधिक्यवर्णने कृते सत्यधिकालङ्कारः । यथा कल्पलतायाम्—

अस्ति ब्रह्माण्डभाण्डं हि यस्मिँल्लोकाश्चतुर्दश ।
तस्मिन्नपि न ते माति कीर्तिर्जगति कीर्तित ! ॥

अत्र चतुर्दशलोकाश्रयत्वेनेतरापेक्षयाऽधिकेऽपि ब्रह्माण्डे कीर्तिर्न मातीत्यनेनाऽऽधारीभूतब्रह्माण्डादाधेयीभूतकीर्तेराधिक्यं स्फुटमेवोक्तमिति भवत्यधिकालङ्कारः ॥

**अन्योन्यं तत्र यत्र स्यादुपकारः परस्परम् ।**

यत्र परस्परमुपकारो भवेत्तत्राऽन्योन्यालङ्कारः । यथा—

विनयैर्भाति विद्येयं विनयो भाति विद्यया ।
धनैराभान्ति दानानि दानैर्भान्ति धनान्यपि ॥

अत्र विद्याविनययोर्धनदानयोश्च परस्परमुपकारवर्णनेन भवत्यन्योन्यालङ्कारः ॥

**विशेषः ख्यातमाधारं विनाऽप्याधेयवर्णने ॥ ४४ ॥**

प्रसिद्धमाधारं विनाऽप्याधेयस्य सत्त्वेन वर्णने कृते सति विशेषालङ्कारः । यथा—

अस्तं गते विजयसिंहमहीमहेन्द्रे
नूनं विभान्ति भुवनेषु गुणास्तदीयाः ।
दूरीकृते मृगमदे चिरमेव पात्रा-
दुज्जृम्भते परिमलो विमलः स कोऽपि ॥

अत्राऽऽधारं राजानं विनाऽपि आधेयानां गुणानां सत्त्वं वर्णितम् । एवं मृगमदं विना परिमलस्येतीह भवति विशेषालङ्कारः ॥

**व्याघातोऽन्यक्रियाकारी क्रियामन्यां करोति चेत् ।**

अन्यक्रियाकारी पदार्थो यदि तदन्यां क्रियां करोति तदा व्याघातालङ्कारः । यथा कल्पलतायाम्—

विधुरेव जगत्सुशीतलं कुरुते स्वैः किरणैः सुधामयैः ।
मयि पश्य विधेर्विपर्ययं स यदेभिर्दहति प्रतिक्षणम् ॥

अत्र शैत्यक्रियाकारिणश्चन्द्रस्य दाहक्रियावर्णनेन भवति व्याघातालङ्कारः ॥

**उत्तरोत्तरकार्याणां धारया गुम्फ उच्यते ॥ ४५ ॥**

उत्तरोत्तरकार्याणां धारावर्णने कृते सति गुम्फालङ्कारः । यथा—

श्रमेण विद्याऽथ तया विवेकस्तेनाऽपि धीरस्य विमोहभङ्गः ।
उत्पद्यते पूर्वजनिप्रभूतप्रभूतपुण्ये सति सत्सहाये ॥

अत्र श्रमेण विद्या, विद्यया विवेको, विवेकेन विमोहभङ्ग उत्पद्यते इति कार्याणां धारावर्णनेन भवति गुम्फालङ्कारः ॥

गृहीतमुक्तरीत्यर्थश्रेणिरेकावली मता ।

यत्र गृहीतमुक्तरीतीनामर्थानां श्रेणिर्भवति तत्रैकावल्यलङ्कारः। अयं भावः—प्राग्वर्णितयोरर्थयोर्मध्येऽग्रिमपदार्थवर्णनाङ्गतयैकस्य ग्रहणमन्यस्य त्यागः, एवमुत्तरोत्तरं यदि भवति तर्ह्ययमलङ्कार इति । यथा कल्पलतायाम्—

मधूनि पद्मे पिबति द्विरेफः पद्मं विभाति श्रवणे प्रियायाः ।
स्पृशत्यमुष्याः श्रवणं च नेत्रं निर्यान्ति नेत्राच्छरवत्कटाक्षाः ॥

अत्र प्राग्वर्णितयोः पद्मद्विरेफयोर्मध्येऽग्रिमवर्णने द्विरेफत्यागेन पद्मग्रहणं कृतम् । एवं पद्मश्रवणयोर्मध्येऽग्रिमवर्णने पद्मत्यागेन श्रवणग्रहणम् । एवमुत्तरोत्तरमपीति भवत्येकावल्यलङ्कारः ॥

दीपकैकावलीयोगान्मालादीपकमिष्यते ॥ ४६ ॥

पदार्थानां तुल्यधर्मकथनरूपस्य प्रागुक्तस्य दीपकस्यैकावल्याश्च योगात् मालादीपकालङ्कारः । यथा—

अद्य श्रयति पुण्येन विवेकं मतिरुद्गता ।
विवेकस्तु ममात्मानमात्मा हरिपदद्वयम् ॥

अत्र मत्यादीनामाश्रयणरूपैकधर्मोक्त्या दीपकमथ च प्राग्वर्णितयोर्मतिविवेकयोर्मध्येऽग्रिमवर्णने मतिपरित्यागेन विवेको गृहीतः, एवमुत्तरोत्तरसत्त्वेनैकावल्यपीत्यनयोरिह योगाद्भवति मालादीपकालङ्कारः । नन्वेवं सत्यन्येषामप्यलङ्काराणां परस्परयोगाद्भवत्वलङ्कारान्तरमिति चेन्न, अत्र प्राक्तनानां विदुषामनुभवानुसारेण पृथक्तया व्यवहारो, नाऽन्यत्राऽपीति ॥

उत्तरोत्तरमुत्कर्षे वर्णिते सार उच्यते ।

उत्तरोत्तरं पूर्वस्मात्पूर्वस्मादुत्कर्षे वर्णिते सति सारालङ्कारः । यथा—

सारा लोकेषु विद्वांसस्तेषु सारा विवेकिनः।
तेष्वनुष्ठानकर्तारस्तेषु कृष्णपदानुगाः॥

अत्रेतरलोकेषु विद्वांसः सारा उत्कृष्टास्तेषु विद्वत्सु विवेकिनः, एवमुत्तरोत्तरमुत्कर्षवर्णनेन सारालङ्कारः॥

**क्रमिकाणां क्रमोपात्ते यथासङ्ख्यं क्रमान्वये॥४७॥**

क्रमिकाणां क्रमेण कथितानां पदार्थानां क्रमोपात्ते क्रमेण कथिते पदार्थे क्रमेणाऽन्वये सति यथासङ्ख्यालङ्कारः। यथा माधवचम्पूग्रन्थे—

कोकानाकुलयंश्चकोरतरुणीवैकल्यमुन्मीलय-
न्नम्भोजानि निमीलयन् कुमुदिनीरुन्मीलयन्सर्वतः।
पान्थानाकुलतां नयन् कुलवधूचेतः समुल्लासय-
न्नस्तं याति दिवापतिः समुदयं यात्येष दोषापतिः॥

अत्र क्रमिकाणां 'कोकानाकुलयँश्चकोरतरुणीवैकल्यमुन्मीलय'न्नित्यादिविशेषणपदार्थानां क्रमोपात्ते दिवापतौ दोषापतौ च विशेष्यपदार्थे क्रमेणाऽन्वयेन भवति यथासङ्ख्यालङ्कारः। नन्वत्र सर्वाण्येव विशेषणान्युभयोरपि विशेष्ययोः सम्भवन्तीति क्व यथासङ्ख्यमिति चेन्न, यतः कोकानामाकुलताप्रयोजकत्वं सूर्यास्ते एव; न चन्द्रोदयेऽपि, चन्द्रस्य दिवोदये तथाऽदर्शनात्, निशायामनुदितेऽपि चन्द्रे तथा दर्शनाच्च। एवं चकोरतरुणीवैकल्योन्मूलकत्वं चन्द्रोदये एव; न सूर्यास्ते, अस्तङ्गतेऽपि सूर्ये चन्द्रानुदये तथाऽदर्शनात्। एवमग्रेऽप्यूह्यम्॥

**पर्यायश्चेदनेकस्य स्यादेकेन समन्वयः।**

अनेकस्य पदार्थस्य यद्येकेन सह समन्वयो भवति तदा पर्यायालङ्कारः। यथा माधवचम्पूग्रन्थे—

कपोले पाण्डुत्वं किमपि जलधारां नयनयो—
स्तनौ कार्श्यं दैन्यं वचसि हृदि दावानलशिखाम् ।
अवज्ञां प्राणेषु प्रकृतिषु विपर्यासमधुना
किमन्यद्वैराग्यं सकलविषयेष्वाकलयते ॥

अत्र विरहिणी आकलयते इत्येकस्मिन्नेव पदार्थे कपोले पाण्डुत्वं जलधारां नयनयोरित्याद्यनेकपदार्थानामन्वयेन भवति पर्यायालङ्कारः ॥

परिवृत्तिर्विनिमयश्चेन्न्यूनाधिकयोर्मिथः ॥ ४८ ॥

न्यूनाधिकयोः पदार्थयोर्यदि मिथः परस्परं विनिमयो वर्ण्यते तदा परिवृत्त्यलङ्कारः । विनिमयस्त्वेकदानेनाऽपरग्रहणम् । अयं भावः—न्यूनवस्तुदानेनाऽधिकवस्तुग्रहणमधिकवस्तुदानेन वा न्यूनवस्तुग्रहणं यदि वर्ण्यते तर्हि भवत्ययमलङ्कारः । यथा कल्पलतायाम्—

प्राणान् प्रदाय युधि मत्तमतङ्गजेभ्यः
क्रीतं यशः किमपि कैरपि वीरधीरैः ॥
कैश्चित्पुनर्भुवि निरर्थकजीवितार्थं
विक्रीतमेव सुयशो विदिशि प्रयातैः ॥

अत्र पूर्वार्द्धे प्राणरूपन्यूनवस्तुदानेन यशोरूपाधिकवस्तुग्रहणं वर्णितम् । उत्तरार्द्धे तु यशोरूपाधिकवस्तुदानेन जीवितरूपाल्प-वस्तुग्रहणं वर्णितमिति भवति परिवृत्त्यलङ्कारः । भवति हि महतां प्राणेभ्योऽपि यशसो गरिष्ठत्वमिति ॥

परिसङ्ख्या निषिद्धार्थनिषेधः श्लेषतोऽन्यतः ।

यत्रैकत्र निषिद्धस्य पदार्थस्याऽन्यत्रापि श्लेषेण निषेधः क्रियते तत्र परिसङ्ख्यालङ्कारः । यथा कल्पलतायाम्—

वृत्ते तादृक्फलं नास्ति पापकेऽस्मिन् कलौ युगे ।
क्लेशाराध्येषु सर्वेषु मन्त्रयन्त्रादिकेष्वपि ॥

अत्र वृक्षे निषिद्धस्य फलस्य श्लेषेण मन्त्रयन्त्रादिकेष्वपि निषेधः कृत इति भवति परिसङ्ख्यालङ्कारः ॥

**वाकाराद्यैर्विकल्पश्चेदलङ्कारः स एव हि ॥ ४९ ॥**

यदि वाशब्दादिना विकल्पः क्रियते तर्हि स एव विकल्प एवाऽलङ्कारः । यथा—

अबन्धो बन्धो वा भवतु भवकारागृहमनु
स्तुतिर्वा निन्दा वा प्रसरतु सतां संसदि सदा ।
सरोजालीशङ्काक्षणमिलदलिव्रातमलिनाः
कटाक्षास्ते साक्षात्कथमपि न यास्यन्ति हृदयात् ॥

अत्राऽबन्धो भवतु बन्धो वा भवतु स्तुतिः प्रसरतु निन्दा वा प्रसरत्विति वाशब्दद्योतितविकल्पकरणाद्भवति विकल्पालङ्कारः ॥

**समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः ।**

यदि कारणान्तरस्य सन्निधानात्कर्तव्यस्य कार्यस्य सौकर्यं सुखेन कर्तुं शक्यता वर्ण्यते तदा समाधिरलङ्कारः । यथा कल्पलतायाम्—

अस्तं यातो दिनमणिरसौ भूषय स्वल्पमङ्गं
तूर्णं तूर्णं रचय कुचयोः केलिपत्राङ्कुरालीम् ।
इत्याकर्ण्य प्रचलितुमियं यावदुत्कण्ठिताऽभू-
त्तावत्प्रीतो जनयति घनाडम्बरं शम्बरारिः ॥

अत्र सूर्यास्ते कर्तव्यस्याऽभिसाररूपकार्यस्य मेघाडम्बररूप-कारणान्तरसन्निधानेन सौकर्यं जातम् । अभिसारो हि घनोदये सुकर एवेति भवति समाधिरलङ्कारः ॥

भूयसामेकसम्बन्धभाजां गुम्फः समुच्चयः ॥ ५० ॥

यत्रैकसम्बन्धभाजां बहूनां पदार्थानां गुम्फो ग्रथना क्रियते तत्र समुच्चयालङ्कारः ।

निपीय मदिरां दुरोदरवशो वसापङ्किलं
सदाऽत्ति पिशितं हितं न खलु वेद नैवाऽहितम् ।
अयं पतति धावति भ्रमति मूर्छति ध्यायति
प्रताम्यति पलायते प्रलपति स्फुरत्यश्नति ॥

अत्र इदम्पदवाच्यमध्यमपुरुषसम्बन्धभाजां बहूनां क्रियापदानां ग्रथनया भवति समुच्चयालङ्कारः ॥

प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ।

यत्र बलवतः शत्रोः पक्षे पक्षीभूते कस्मिंश्चित् पराक्रमो वर्ण्यते तत्र प्रत्यनीकालङ्कारः । अयं भावः—यत्र शत्रुर्बलीयान् स्वयं जेतुमशक्यस्तत्र तत्पक्षाश्रितदुर्बलस्य कस्यचिज्जयः कृत इति वर्णिते भवत्ययमलङ्कार इति । यथा शृङ्गारतटिन्याम्—

अशक्तोऽयं तावत्तव वदनसौन्दर्यविजये
सुधाधामा धामप्रसररभसादेत्य सहसा ।
सरोजातं जातु स्फुटतदनुकारीति मतितो
निशायां सायान्हावधि मलिनयत्येव महसा ।

अत्र कान्तामुखसौन्दर्यविजयेऽसमर्थश्चन्द्रः कान्तामुखानुकारितया कान्तामुखपक्षीभूतं सरोजातमेव मलिनयतीति वर्णनाद्भवति प्रत्यनीकालङ्कारः ॥

प्रतीपमुपमानस्य हीनत्वमुपमेयतः ॥ ५१ ॥

प्रसिद्धोपमेयतो यदि प्रसिद्धोपमानस्य हीनत्वं वर्ण्यते तर्हि प्रतीपालङ्कारः । यथा कल्पलतायाम्—

अयं नृपश्चेदरिवीरहन्ता दानप्रियो लोचनगोचरोऽभूत् ।
कर्णेन किं किं सुरभूरुहेण किं भानुना वाऽपि किमर्जुनेन ॥

अत्र प्रसिद्धोपमानानां कर्णादीनामुपमेयान्नृपात् हीनत्वं वर्णितमिति भवति प्रतीपालङ्कारः । केचित्तु पूर्वोक्तप्रतीपोपमालङ्कारमध्य एव प्रतीपस्यान्तर्भावमिच्छन्ति ॥

उल्लासोऽन्यमहिम्ना चेद्दोषो ह्यन्यत्र वर्ण्यते ।

यद्यन्यस्य कस्याऽपि महिम्ना गुणप्राचुर्येणाऽन्यत्र दोषो वर्ण्यते तर्ह्युल्लासालङ्कारः । यथा—

मधुलिहस्तदभाग्यविजृम्भितं यदि न चम्पककोरकमाश्रयेत् ।
समुदितेऽपि विधौ मलिनी भवेत्कमलिनी यदि तन्निजदुष्कृतम् ॥

अत्र चम्पककोरकगुणमहिम्ना तदनाश्रयणान्मधुलिहोऽभाग्यवर्णनाद्दोषो वर्णितः । एवं विधुकमलिन्योरपीति भवत्युल्लासालङ्कारः ॥

रूपं चेदन्यथाभूतं तथा स्यात्पूर्वरूपता ॥५२॥

कस्यचिद्वस्तुनोऽन्यथाभूतं रूपं नष्टस्वरूपं यदि केनचिद्धेतुना तथा स्यात् पुनस्तादृशमेव पूर्वस्थितं रूपं स्यात्तर्हि पूर्वरूपतालङ्कारः । यथा—

उपेत्य त्रेतातो निजचरणहानिक्रममतः
समन्ताद्धर्मोऽभूद्धलवति कलावेकचरणः ।
पुरस्ताद्द्यैवं जयिनि जयसिंहक्षितिपतौ
बभूवुश्चत्वारः पुनरभिनवास्तस्य चरणाः ॥

अत्र कृतयुगे चतुश्चरणस्य धर्मस्य त्रेतायामेकस्य चरणस्य हानिर्द्वापरे द्वितीयस्य कलौ तृतीयस्येति क्रमेणेदानीमेकचरणत्वमापन्नस्य तस्यैव पुनर्जयसिंहक्षितिपतौ जयिनि सति चतुश्चरणत्वरूपपूर्वभावस्य प्राप्तिर्जातेति वर्णनाद्भवति पूर्वरूपतालङ्कारः ॥

तद्गुणः स्वगुणे म्लाने त्वन्यतः स्वगुणोदयः ।

केनचिद्धेतुना स्वगुणे म्लाने सत्यन्यतः पुनः स्वगुणोदयो यदि भवति तर्हि तद्गुणालङ्कारः । यथा कल्पलतायाम्—

तव प्रतापानलदाहितानि चिरं विरूपाण्यरिमन्दिराणि ।
अथो कृपादृष्ट्यमृतैकवृष्ट्या लब्धस्वरूपाणि निरीक्षितानि ॥

अत्र प्रतापानलदाहेन विरूपतां प्राप्तानामरिमन्दिराणां पुनः कृपादृष्टिवृष्ट्या पूर्वस्वरूपलाभो जात इति वर्णनाद्भवति तद्गुणालङ्कारः । पूर्वरूपतालङ्कारे पूर्वावस्थितरूपस्य नाश एव, तद्गुणालङ्कारे तु म्लानतामात्रं, न तु सर्वथा नाश इत्यनयोर्भेदः ॥

सङ्गतान्यगुणानङ्गीकारे त्वाहुरतद्गुणम् ॥ ५३ ॥

सङ्गतस्य सहवर्तिनोऽन्यस्य गुणानङ्गीकारे गुणाऽग्रहणेऽतद्गुणमलङ्कारमाहुः । यथा—

दुर्जनेन सहितोऽपि सज्जनो नाददाति न च किञ्चिदुज्झति ।
काचसङ्कलनकातरीकृतः किं मणिः स विकृताकृतिर्भवेत् ॥

अत्र सङ्गतस्याऽपि दुर्जनस्य काचस्य च कमपि गुणं सज्जनो मणिश्च नाददातीति वर्णनाद्भवत्यतद्गुणालङ्कारः ॥

अवज्ञा वर्ण्यते वस्तु गुणदोषाक्षमं यदि ।

यदि वस्तु गुणे दोषेऽपि चाऽऽत्ममसमर्थमिति वर्ण्यते, इदं वस्तु न वा गुणाकरं न वा दोषाकरमित्याकारकहेलया तदवज्ञालङ्कारः । यथा—

एष नूनमवनीन्द्रकोटिभिर्लालितः सुरसमाजपालितः ।
नादृतोऽपि नृपसूनुनाऽमुना चेदहो! क्षतिरितीह का भवेत् ॥

अत्र तादृशस्य महापुरुषस्य केनचिन्नृपसूनुना कृतो नादरो न क्षतिकरो न वा गुणाकर इति तस्याऽवहेलावर्णनेन भवत्यवज्ञालङ्कारः ॥

प्राक्सिद्धस्वगुणोत्कर्षेऽनुगुणः परसन्निधेः ॥५४॥

परसन्निधानवशात् प्राक्सिद्धे एव स्वगुणेऽधिकोत्कर्षे वर्णिते सत्यनुगुणालङ्कारः । यथा शृङ्गारतटिन्याम्—

श्यामलाः सहजमेव कटाक्षाः कज्जलैरतितरां घनभासः ।
विश्वतोऽपि विरतानि मुनीनां विश्वतो मलिनयन्ति मनांसि ॥

अत्र सहजश्यामलानां कटाक्षानां कज्जलसन्निधानात्पुनरधिकोत्कर्षवर्णनेन भवत्यनुगुणालङ्कारः ॥

प्रश्नोत्तरक्रमेणोक्तावुत्तरालङ्कृतिर्भवेत् ।

प्रश्नोत्तरक्रमेणोक्तौ सत्यामुत्तरालङ्कृतिर्भवेत् । प्रश्नोत्तरक्रमस्तु—आदौ प्रश्नः पुनरव्यवधानेनैवोत्तरमिति । यथा—

मृतोऽपि को जीवति यो यशस्वी जीवन्मृतः को न हि यः परार्थी ।
को वा सुखी चेतसि यस्य शान्तिः को नाम दुःखी हृदि यस्य लोभः ॥

अत्र मृतोऽपि को जीवतीति प्रश्नस्याऽव्यवधानेनैव यो यशस्वीत्युत्तरं दत्तम् । एवमग्रेऽपीति भवत्युत्तरालङ्कृतिः ॥

पिहितं परवृत्तान्तज्ञानज्ञापकचेष्टितम् ॥ ५५ ॥

परवृत्तान्तज्ञानस्य ज्ञापकं चेष्टितं यत्र वर्ण्यते तत्र पिहितालङ्कारः । अयं भावः—एतदीयवृत्तान्तोऽयं मया ज्ञात इति ज्ञापयितुं यत्र तूष्णीमेव चेष्टामात्रं क्रियते न तु किञ्चिदुच्यते तत्राऽयमलङ्कार इति । यथा शृङ्गाररत्नदीपिकायाम्—

कुतूहलविलोकनस्फुरितचित्तमालोकितुं
स्थितास्स्यमरवाहिनीमिति मितं वदन्त्याः सखी ।
नखक्षतनिरीक्षणात्कुचतटे त्रुटत्कञ्चुके
स्खलच्चपलचेलकाञ्चलमलङ्करोति द्रुतम् ॥

अत्र तव दिवाऽभिसाररूपो वृत्तान्तो मया ज्ञात इति सखीं ज्ञापयितुं तादृशं वस्त्राञ्चलं कुचतटेऽलङ्करोति शोभयतीति तस्या अयमाशयः । तथा हि—हे सखि ! आदौ वासोञ्चलेन कुचस्थितनखक्षतं पिधेहि पश्चान्मां प्रतारयेतीह भवति पिहितालङ्कारः ॥

व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगोपनम् ।

यत्र शङ्कमानस्य कामपि शङ्कां कुर्वतो जनस्य निकटे छद्मना छलेन कृतवस्तुनो गोपनं क्रियते तत्र व्याजोक्त्यलङ्कारः । यथा तत्रैव—

किं पश्यसि त्वं परिवृत्तवक्त्रा मुहुर्मुहुः खिन्नशरीरयष्टिः ।
उत्तुङ्गगङ्गालहरीर्निरीक्ष्य भयेन पश्यामि पुनःपुनस्ताः ॥

अत्र कस्यचित्कामुकस्य दर्शनं शङ्कमानायाः सख्याः निकटे गङ्गातरङ्गदर्शनच्छलेन कृतमपि कामुकदर्शनं गोपयतीति भवति व्याजोक्त्यलङ्कारः ॥

वक्रोक्तिः श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पने ॥५६॥

वाच्ये पदार्थे श्लेषेण काका वाऽर्थान्तरकल्पने कृते सति वक्रोक्त्यलङ्कारः । काकुः शिरश्चालनन्यायः । यथा—

मा गा विषादं मुग्धाक्षि! स्मरार्ता यामि कं सखि! ।
चरितं तव पश्यामि स्मरामि तु न कञ्चन ॥

अत्र विषादं खेदं मा गा इति सख्यामुक्तवत्यां सत्यां विरहिणी श्लेषेण विषादं विषभक्षकं महादेवं मा गा इत्यर्थं कल्पयित्वा हे सखि ! स्मरार्ता कामार्ताऽहं कं यामि; शरणमिति शेषः, स हि कामान्तक इति हेतोस्तमेव यामीत्याह । अथ साऽपि विदग्धा सखी आर्ताया यामिकं रक्षकं स्मर इत्यर्थं कल्पयित्वा पुनराह, अहं तु तव चरितमात्रं पश्यामि कमपि न स्मरामीति इत्येवमत्र भवति वक्रोक्त्यलङ्कारः ॥

स्वभावोक्तिः स्वभावस्य स्वजात्यादिषु वर्णने ।

स्वजात्यादिषु स्वभावस्य वर्णने कृते सति स्वभावोक्त्यलङ्कारः । यथा माधवचम्पूग्रन्थे—

आरूढक्षितिपालभालविगलत्स्वेदाम्बुसेकोद्धता
भेरीझाङ्कृतिचापटङ्कृतिचमत्कारोल्लसन्मानसाः ।
क्षुभ्यत्क्षोणितलं स्फुरत्खुरपुटं चञ्चच्चलत्केशरं
मन्दभ्रान्तविलोचनं प्रतिदिशं नृत्यन्ति वाजिव्रजाः ॥

अत्र जलसेकेन वाजिनामौद्धत्यं स्वभावः, एवं नर्तनकाले चलत्केशरादिरपि स्वभावः, स चाऽत्र वर्णित इति भवति स्वभावोक्त्यलङ्कारः ॥

भाविकं भूतभाव्यर्थसाक्षाद्दर्शनवर्णनम् ॥ ५७ ॥

यत्र भूतस्य भाविनो वाऽर्थस्य साक्षाद्दर्शनवर्णनं क्रियते तत्र भाविकालङ्कारः । यथा—

अद्यैवाऽयं प्रलयजलधिस्त्यक्तवेलोऽप्यवेल—
मद्याप्येष भ्रमति परितो भूपतिर्मानसिंहः ।

इत्थं कीर्त्तिक्षितिप ! भवतो जैत्रयात्रान्तराले
भूयोभूयः प्रसरति सतां त्यक्तवादः प्रवादः ॥

अत्र भूतस्य मानसिंहप्रयाणस्य भाविनश्च मलयजलधेर्वेलात्यागस्य दर्शनं साक्षादेव जातमिति वर्णनाद्भवति भाविकालङ्कारः ॥

देशात्मविप्रकृष्टस्य दर्शने भाविकच्छविः ।

देशादात्मनः सकाशाद्वा विप्रकृष्टस्य दूरवर्तिनो दर्शने वर्णिते सति भाविकच्छविरलङ्कारः । यथा शृङ्गारलतिकायाम्—

दूरस्थितस्त्वमसि दुर्जननिर्विशेषः
क्रूरात्मभाव इति मूढजनापवादः ।
त्वं दृक्पथे स्फुरसि नाथ ! सदा मदीये
क्रूराऽहमेव तव दृक्पथदूरसंस्था ॥

अत्र देशादात्मनः सकाशाद्वा विप्रकृष्टस्य नायकस्य दर्शनवर्णनेन भवति भाविकच्छविरलङ्कारः ॥

उदात्तमृद्धिश्चरितं श्लाघ्यं चान्योपलक्षणम् ॥९८॥

यत्राऽतिश्लाघ्यतरा ऋद्धिः सम्पत्तिर्वर्ण्यते, अथवाऽन्योपलक्षणमन्यवर्णनप्रसक्तं श्लाघ्यं चरितं वर्ण्यते तत्रोदात्तालङ्कारः । यथा—

आगाराङ्गणदेहलीमणिमहःश्रेणीसमुत्सारित—
स्वान्तर्ध्वान्तकुले द्विजातिमहिलालीलाविलासस्थले ।
गौडश्रीयशवन्तदानकणिकासम्पातसम्पादिते
नो जानन्त्युपयान्तमस्तमुदयं भास्वन्तमन्तःस्थिताः ॥

अत्राऽधिकतरसम्पत्तिवर्णनेनोदात्तालङ्कारः ।

अत्युक्तिरद्भुताऽतथ्यशौर्यौदार्यादिवर्णने ।

अतथ्यभूतानामसत्यभूतानामद्भुतशौर्यौदार्यादिनां वर्णने कृते सत्यत्युक्त्यलङ्कारः । आदिना अन्ये चरित्रक्रियादयो ग्राह्याः । यथा—

असौ किमपि भूपतेस्तमस एकरेखायितो
हयो यदवगाहते क्षितिमितीह मन्ये ततः ।
विजित्य पवनान् परानुदितगर्वतः सर्वतो
निजश्वसनमारुतद्रुतजिगीषया धावति ॥

अत्राऽद्भुताऽतथ्यवेगवर्णनेन भवत्यत्युक्तिरलङ्कारः ॥

इत्यर्थाऽलङ्काराः ॥

अथ शब्दाऽलङ्कारा निरूप्यन्ते ।

खड्गबन्धादयश्चित्रा गतप्रत्यागतादयः ॥ ८९ ॥

खड्गबन्धपद्मबन्धादयो बन्धाः चरणेषु श्लोकेषु वा क्रमव्युत्क्रमाभ्यां पाठेन गतप्रत्यागताः । आदिना एकाक्षरद्व्यक्षराद्याः चित्रालङ्कारा भवन्तीत्यर्थः । यथा—

साऽनमा नवभा रामा माराभा वनमानसा ।
याति चारुविभामाभा भामाभाविरुचाऽतिया ॥

अत्र व्युत्क्रमपाठेन प्रथमाच्चरणाद्द्वितीयं चरणं तृतीयाच्चतुर्थमिति गतप्रत्यागतेनाऽत्र चित्रालङ्कारः । श्लोकार्थस्तु—न नमतीत्यनमा अभिमानिनी । नवभा नवदीप्तिः । मारेण कामेनाऽऽभातीति माराभा । वनाय जलमाहर्तुं मानसं चित्तं यस्या इति वनमानसा । तथा चारुविभया उत्तमदीप्त्या मावल्लक्ष्मीवद्भातीति चारुविभामाभा । भामा सत्यभामा तस्या भावोऽभिप्रायोऽस्यामस्तीति भामाभाविनी सा चाऽसौ रुक् चेति तया विशिष्टा । विशेषणे चाऽत्र तृतीया । अयं भावः—यस्यां रुचि सत्यभामाया

अपि भावस्तिष्ठति ममाऽपीदृशी रुक् स्यात् तादृश्या तया विशिष्टा । ईदृशी या रामा सा अतिया अति अतिक्रम्य याति गच्छतीति तथा ॥

अनुप्रासश्चतुर्विधः—स्फुटानुप्रासो, लाटानुप्रासो, वृत्त्यनुप्रासः, छेकानुप्रासश्चेति । तत्राऽऽद्यः—

पदादिषु पदावृत्त्या स्फुटो वर्णविभेदतः ।
योगी भोगीव संयाति पश्य त्वमुभयच्युतम् ॥६०॥

पादस्याऽऽदौ मध्येऽन्ते वा वर्णस्य पदसम्बन्धिनो हलः स्वरस्य वा विभेदेन भिन्नत्वेन कृत्वा पदस्याऽऽवृत्त्या पुनःपुनर्निरूपणात्स्फुटानुप्रासालङ्कारः । उदाहरणम्—हे मित्र ! अयं योगी गृहाश्रमत्यागपूर्वं कृतयोगाभ्यासः पश्चाद्योगाच्च्युतो भोगीव भोगवान् गृहस्थ इव संयाति तमिममुभयलोकच्युतं त्वं पश्य । अत्र योगी भोगीति पूर्ववर्णविभेदेन पदावर्तनात्स्फुटानुप्रासः । यथा वा शिवस्तोत्रे—

जनः काश्चित्कामी तव चरणगामी यदि तदा
पदं ब्रह्मादीनामपि हरति दीनाहितमिव ।
महेश ! त्वद्ध्यायी यदि पुनरमायी तु पुरुष—
स्तदा किं निर्मायं न हि पदममायं भजति सः ॥

अत्र प्रतिचरणमेव—कामी, गामी, दीना, दीना, ध्यायी, मायी, मायं, मायं, इति पूर्ववर्णविभेदेन पदावर्तनाद्भवति स्फुटानुप्रासालङ्कारः । क्वचित्पदे पूर्ववर्णविभेदः, क्वचिन्मध्यवर्णविभेदः क्वचिदन्त्यवर्णविभेदः । अन्यत्समममिति बोध्यम् ॥

अथ द्वितीयः—

लाटानुप्रासभूर्भिन्नाऽभिप्राया पुनरुक्तता ।
देवेशवेशवीक्षातो दुर्वासास्तोषमाप्तवान् ॥ ६१ ॥

यदा शब्देषु पुनरुक्तता भिन्नाभिप्रायाऽर्थभेदे नियन्त्रिता भवति तदा लाटानुप्रासो लाटानुप्रासालङ्कारः । उदाहरणम्— देवेश इन्द्रस्तस्य वेशः शोभाप्रदं तस्य वीक्षातो वीक्षणेन दुर्वाससो मुनेस्तोपमासिर्जाता स्वकीयं हारं च ददाविति शेषः । अत्र देवेशपदे भिन्नाभिप्रायस्याऽर्थस्य पुनरुक्त्या लाटानुप्रासः । यथा वा माधवचम्पूग्रन्थे—

आलीभिर्नलिनीदलैः प्रतिदिशं दूरीकृतालिव्रजे—
मालाकारतया पुनःपुनरुपायातैः समासेविता ।
ईषद्भङ्गितकन्धरं प्रकटितप्रेमोत्करं प्रेयसी
किञ्चिच्चञ्चलचेलकाञ्चलचलन्नेत्राम्बुजं पश्यति ॥

अत्र चेलकाञ्चलचलदित्यत्र भिन्नाभिप्रायस्याऽर्थभेदे नियन्त्रितस्य चलचलशब्दस्य पुनरुक्त्या भवति लाटानुप्रासालङ्कारः ॥

अथ तृतीयः—

आवृत्तवर्णसम्पूर्णं वृत्त्यनुप्रासवद्वचः ।
जगज्जगन्निवासश्चेत्पाता नाऽकि वनेऽवने ॥ ६२ ॥

यत्राऽऽवृत्तेन पुनःकथितेन वर्णेनाऽक्षरमात्रेण सम्पूर्णं व्याप्तं वचो भवति तत्र वृत्त्यनुप्रासनामाऽलङ्कारः । उदाहरणम्— जगन्निवासो हरिः पाता रक्षकश्चेत्तर्हि वने यदवनं रक्षणं तन्निमित्तं कदाचिदपि जगत् विश्वं अकि दुःखि न स्यात् । जगन्निवास इत्यत्र विशेषणमात्रप्रयोगो विशेष्योपपत्तौ सागराम्बरादिवत् । 'अकं पापे च दुःखे च' इति विश्वः । अत्र जगज्जगदिति वने वने इति चैकस्वरयोरेकहलोः पुनरावृत्त्या वृत्त्यनुप्रासः । यथा वा—

निःस्वेदाकुलनीलकुन्तललसत्कर्णान्तपाली प्रियं
किञ्चिन्नामितकन्धराविगलितं वासः कराकर्षिणी ।
आयातं महिलाविलासनिपुणा प्राणप्रियं कामिनी
किञ्चिल्लुङ्क्षितचेलकाञ्चलचलन्नेत्राञ्चलं पश्यति ॥

अत्र लकारचकारयोरेकस्वरयोर्भिन्नस्वरयोर्भिन्नहलोरकारे-कारयोरप्यनेकश आवृत्तिसत्त्वाद्भवति वृत्त्यनुप्रासनामाऽलङ्कारः ॥

अथ चतुर्थः—

सव्यञ्जनस्वरावृत्तौ छेकानुप्रास इष्यते ।
भव्ये गव्ये बाडवानां रुचिर्मण्डे व्यजायत ॥६३॥

सव्यञ्जनानां स्वराणामावृत्तौ सत्यां छेकानुप्रासालङ्कारः । अयं भावः—यद्धलयुक्तो योऽभिहितस्तद्धलयुक्तस्य तस्याऽऽवृत्तिरिति । अत्र तु स्वरावृत्तिरावश्यकी व्यञ्जनावृत्तिरप्याद्यक्षरभिन्ना । लाटानुप्रासे तु सकलस्वरव्यञ्जनानामावृत्तिः शब्दे पुनरुक्ततयोक्तत्वादिति भेदः । उदाहरणम्—भव्ये सुन्दरे गव्ये गोसम्बन्धिनि मण्डे मस्तुनि तद्दर्शनादेव ब्राह्मणानां रुचिर्व्यजायत पार्थयज्ञे इति शेषः । अत्र भव्ये गव्ये इति सव्यञ्जनस्वरावृत्त्या छेकानुप्रासाख्योऽलङ्कारः । यथा हृदयकल्पवल्लतायाम्—

चञ्चन्नीलाश्मलीलाविधिविहितमहाव्योमयानान्तराले
धत्ते मत्तेभकुम्भस्खलनपरिलसन्मौक्तिकानीव भानि ।
सव्येऽसव्येऽथ हस्ते कलयति कलया व्याजतः शीतभानोः
काश्मीरीरश्मिरीत्या स्फुरति मृगमदाद्भामिनी कामिनीव ॥

अत्र नीला, लीला, धत्ते, मत्ते, काश्मीरीत्यादिपदेषु सव्यञ्जनस्वरावृत्तिरवाद्भवति छेकानुप्रासालङ्कारः ॥

---

(१) अकारेवर्णयोः—इति मूलमुद्रितपुस्तके पाठः ।

अथ यमकालङ्कारः—

सस्वरव्यञ्जनावृत्त्या स्तबकं यमकं भवेत् ।
देवं नारायणं वन्दे रमणीरमणीयकम् ॥ ६४ ॥

यदा सस्वराणां व्यञ्जनानामावृत्त्या कृत्वा स्तबकं वर्णसमूहो भवति तदा यमकालङ्कारः । अत्राऽयं भावः—यद्यत्स्वरयुक्तो यो यो हल्समुदायोऽभिहितस्तत्तत्स्वरयुक्तस्य भिन्नार्थस्य तत्तद्धल्समुदायस्याऽऽवृत्तिरिति । उदाहरणम्—रमणी रामा रमणीया यस्य तं लक्ष्मीकान्तमित्यर्थः । समासान्तः कः । तथाभूतं नारायणं देवं श्रीहरिं वन्दे स्तौमि । अत्र भिन्नार्थस्य रमणीपदस्याऽऽवृत्त्या यमकालङ्कारः । यथा वा हृदयकल्पलतायाम्—

पञ्चेषुपञ्चेषुभिराहताङ्गी सङ्गीतसङ्गीतपरम्पराङ्गी ।
पद्मेव पद्मा ललितस्वहस्ता वामाक्षि ! वामाक्षिपतीक्षणान्तम् ॥

अत्र भिन्नार्थानां पञ्चेषुपञ्चेष्वित्यादिपदानां मध्ये प्रतिचरणमेव सस्वरव्यञ्जनावृत्त्या वर्णसमूहत्वाद्भवति यमकालङ्कारः । अत्र बहुत्वसूचकं स्तबकमिति महिम्ना त्र्यक्षरप्रभृतिषु तादृगावृत्तिसत्त्वे यमकालङ्कारो व्यक्षराद्यावृत्तिसत्त्वे च लाटानुप्रास इत्येवाऽयं भेदः ॥

अथ पुनरुक्तप्रतीकाशः —

पुनरुक्तप्रतीकाशः पुनरुक्तार्थसन्निभः ।
केसरी कानने भाति वनेभातिविमर्दकः ॥
भवान् सिंहासने भाति भातिसिंहासनेभवान् ॥६५॥

वस्तुतः पुनरुक्तार्थकभिन्नाऽऽपाततोऽवभासते यद्वाक्यं तत्पुनरुक्तप्रतीकाशो नामाऽलङ्कारः । यथाऽत्रैव केसरीति । अत्र—कानने भाति वने भाति इतिशब्दयोः पुनरुक्तार्थकत्वमा-

पाततोऽवभासते वास्तवं तु नास्ति । तथा हि—कीदृशः केसरी ? वनेभातिविमर्दकः, वनसम्बन्धिनामिभानां हस्तिनामत्यन्तं विमर्दको मर्दनकर्तेति । एवं सिंहासने भाति भातिसिंहासने इतिशब्दयोरपि पुनरुक्तार्थकत्वमापातत एवाऽवभासते न तु वास्तवमस्ति । तथा हि—किंभूतो भवान् ? भातिसिंहासनेभवान् भान्ति ते भाः, सिंहासनं सिंहकृतस्वकुम्भोपवेशनं तदतिक्रान्तं यैस्तेऽतिसिंहासनाः, भाश्च ते अतिसिंहासनाश्चेति कर्मधारयः । सिंहैरपि ये हन्तुमाक्रमितुं वा न शक्यन्ते एतादृशा इभा हस्तिनोऽस्य सन्तीति भातिसिंहासनेभवान् इति पुनरुक्तार्थसन्निभसत्त्वादिह भवति पुनरुक्तप्रतीकाशालङ्कारः ॥

वीक्षणाय सदसद्विवेकिनां
शिक्षणाय लघुबुद्धिशालिनाम् ।
लक्षणैरिह विचिन्तनैर्मया
लक्षिता स्वकृतपद्यपद्धतिः ॥ ६६ ॥

द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिश्रुतो
भट्टाचार्यशतावधान इति यो गौडोद्भवोऽभूत्कविः ।
ग्रन्थे काव्यविलाससंज्ञिनि चिरञ्जीवेन तज्जन्मना-
ऽलङ्कारैरियमादितो हृदि सतां सज्ञाय भङ्गिः कृता ॥ ६७ ॥

इति श्रीचिरञ्जीवभट्टाचार्यकृतकाव्यविलासे
अलङ्कारमयी द्वितीया भङ्गिः ॥
समाप्तश्चायं ग्रन्थः ।



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra. Edited with Introduction and Index by Gopinātha Kavirāj, M. A.

No. 2—The Advaita Chintāmaṇi, by Rangoji Bhaṭṭa, Ed. with Introduction etc. by Nārāyaṇa Śāstrī Khiste Sāhityāchārya.

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī. Ed. with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya.

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja. Ed. with Introduction etc. by Gopināth Kavirāj, M. A.

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra. Ed. with Introduction etc. by Gopīnāth Kavirāj, M. A.

No. 6 (Part I)—The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka. Ed with Introduction etc. by M. M. Gangānātha Jhā, M. A., D. Litt.

No 6 (Part II)—Ditto Ditto

No. 7 (Part I)—Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra. Ed. with Introduction etc. by Gopīnāth Kavirāj, M.A.

No. 7—(Part II) Ditto Ditto

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra. Ed. with Introduction etc. by Jagannātha Śāstrī Hoshing Sāhityopādhyāya.

No. 9 (Part I)—The Bhakti Chandrikā, a Commentary on Śāṇḍilya's Bhaktistūras. By Nārāyaṇa Tīrtha. Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.

No. 10 (Part I)–The Siddhāntaratna, by Baladeva Vidyābhusaṇa.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.

No. 11–The Śrī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by Śankarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa Śāstri Khiste Sāhityāchārya.

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa Śastrī Khiste Sāhityāchārya.

No. 13–The Siddhasiddānata Sangraha, by Balabhadra.
Ed. with Introduction by Gopināth Kavirāj, M. A.

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha Śarmā Sāhityopādhyāya, M. A. and Jagannātha Śāstrī Hoshing Sāhityopādhyāya.

No. 15–(Part I)–The Tripurārahasya.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha Śarmā Sāhityopādhyāya, M. A. and Jagannātha Śāstrī Hoshing Sāhityopādhyāya.

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānāth Jhā, M. A., D. Litt.

No. 18 (Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.



# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES.

Edited by
GOPINATH KAVIRAJ ,M. A.

Vol. I—

(a) Studies in Hindu Law (I): its evolution, by Gaṅgānātha Jhā.

(d) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nīrmāṇa Kāya, by Gopināth Kavirāj.

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopināth Kavirāj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):–its sources, by Gaṅgānātha Jhā.

(d) A New Bhakti Sūtra, by Gopīnath Kavirāj.

(e) The System of Chakras according to Gorakṣa Nātha, by Gopināth Kavirjā.

(f) Theism in Ancient India, by Gopināth Kavirāj.

(g) Hindu Poetics, by Baṭuka nātha S'armā.

(h) A seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vira S'aiva Philosophy ,by Gopināth Kavirāj.

(j) Nyāya Kusumāñjali ( English Translation ), by Gopināth Kavirāj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstrī Khiste.

(l) Sondala Upādhyāya, by Gopināth Kavirāj.

Vol. III—

(a) Index to S'abara's Bhāṣya by the late Col. G.A. Jacob.

(b) Studies in Hindu Law (3) : Judicial Procedure: by Gaṅgā nātha Jhā.

(c) Theism Ancient India, by Gopintāh Kavirāj.

(d) History and Bibliography of Nyāya Viśeṣika Literature, by Gopināth Kavirāj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭachārya.
(f) Indian Dramaturgy, by P. N. Pāṭaṇakar.

Vol. IV—

(a) Studies in Hindu Law (4) : Judicial Procedure: by Gaṅgānātha Jhā.
(b) History and Bibliography of Nyāya Vaiśeṣika Literature. by Gopināth Kavirāj.
(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva Sāstrī.
(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedī.
(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy.
(f) Satkāryavāda: Causality in Sāṅkhya, by Gopintāh Kavirāj.
(g) Discipline by Consequences, by G. L. Sinha.
(h) History of the origin and expansion of the Aryans by A. C. Ganguly.
(i) Punishments in Ancient Indian Schools by G. L. Sinha.

To be had of—

The Superintendent, Government Press,
Allahabad, U.P. (India).